# कार्तवीर्य द्वादशनाम स्तोत्रम्

कार्तवीर्य अर्जुनो नाम राजा बाहु सहस्रवान्
तस्य स्मरण मात्रेण गतं नष्टं च लभ्यते ॥ १ ॥

कार्तवीर्यः खलद्वेषी कृतवीर्य सुतो बली
सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः ॥ २ ॥

रक्तगन्धो रक्तमाल्यो राजा स्मर्तुरभीष्टदः
द्वादशैतानि नामानि कार्तवीर्यस्य यः पठेत् ॥ ३ ॥

संपदः तत्र जायन्ते जनः तत्र वशं गतः
आनयत्याशु दूरस्थं क्षेम लाभ युतं प्रियम् ॥ ४ ॥

सहस्रबाहु सशरं महितं सचापं रक्तांबरं रक्त किरीट कुण्डलम्
चोरादि दुष्टभय नाशं इष्टदं तं ध्यायेत् महाबल विजृंभित कार्तवीर्यम् ॥ ५ ॥

यस्य स्मरण मात्रेण सर्व दुःख क्षयो भवेत्
यन्नामानि महावीर्यश्च अर्जुनः कृतवीर्यवान् ॥ ६ ॥

हैहयाधिपतेः स्तोत्रं सहस्र आवृत्ति कारितम्
वाञ्चितार्थ प्रदं नृणां स्वराज्यं सुकृतं यदि ॥ ७ ॥

॥ इति कार्तवीर्य द्वादशनाम स्तोत्रम् ॥